''सर्वे निमेषा जज्ञिर'' इत्यादिश्रुतेः। कालदिशौ सर्वाधारसर्वकार्यनिमित्ते। दिगाकाशयोर्देशपरिच्छेदाभावद्विभुत्वम्। प्रत्यक्षप्रतिबन्धकं नीलरूपवत्तमः। पृथिवीतमोंशेन जन्यत्वाद्रूपम्।

११. शब्दस्पर्शरूपरसगन्धसंख्यापरिच्छेदाकारसंयोगसादृश्यस्नेहगुरुत्व लघुत्वकठिणत्वमृदुत्ववेगज्ञानसुखदुःखेच्छाक्रोधकृतिपुण्यपापसंस्कारलज्जावी र्यधैर्यबलदयाभयानि गुणा द्वात्रिंशत्।

१२. शब्दादयः पञ्च श्रोत्रादिपञ्चेन्द्रियग्राह्याः। तत्र शब्द आकाशे शब्दस्पर्शौ वायौ। शब्दस्पर्शरूपाणि तेजसि। शब्दस्पर्शरूपरसा जले। शब्दस्पर्श रूपरसगन्धाः पृथिव्याम्। वाय्वादीनामाकाशजन्यत्वेन पितुर्गुणा पुत्र इति न्यायात्। न च पञ्चानां भूतानां पञ्चीकरणात् पञ्चापि गुणाः पञ्चभूतेष्विति वाच्यम्।स्थूलभूतानामेव पञ्चीकरणात्।

१३. एकत्वादिस्सङ्ख्या। परिच्छेदस्त्रिविधः। देशतःकालतो वस्तुत इति। देशतः परिच्छेद एव परिमाणम्। देशतः कालतः परिच्छेद एव परत्वापरत्वे। वस्तुतः परिच्छेदस्सद्वितीयत्वम्। ब्रह्मणस्त्रिविधपरिच्छेदो नास्तीति विभुत्वम्। आकारवतामनेकत्व आकारो जातिः। तस्यैकत्वे गुण एव। यथा घटत्वमाकाशत्वम्। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम्। स्नेहादिषट् पृथिवीजलयोः। वेगो मूर्तवृत्तिः। क्रियावन्मूर्तम्।

१४. ज्ञानादयो दयान्ता मनोमात्रगुणाः ज्ञानमन्तःकरणवृत्तिः। सा चतुर्विधा। संशयो निश्चयो गर्वस्स्मृतिश्चेति। एता मन आदीनां क्रमादवृत्तयः। अतिनिर्मलत्वाच्चैतन्यावच्छेदकत्वाज्ज्ञानत्वोपचारः। अन्तःकरणस्य सादित्वेन सावयवत्वात्परिणामात्मिका वृत्तिरस्ति।

१५. एकस्मिन् विरुद्धानेकधर्मप्रकारकज्ञानं संशयः। भावाभावयोरेव विरोध इति नियमः। असामानाधिकरण्यस्यापि विरोधत्वात्। निश्चयोऽनुभवः। स द्विविधः। यथार्थायथार्थभेदात्। तद्वति

तत्प्रकारको यथार्थः । विशेष्यावृत्तिप्रकारकस्त्वयथार्थः । उभयमपि पञ्चविधम् । प्रत्यक्षानुमित्युपमितिशाब्दोपपादकज्ञानभेदात् ।

१६. प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकञ्चेति । विशेषणविशेष्यसंसर्गानवगाहिज्ञानमाद्यम् । तत्त्वमसीत्यादिवाक्यजन्यं प्रत्यक्षं ब्राह्मम् । तात्पर्यमात्रविषयस्य भानं निर्विकल्पकमिति विवरणे । तशमस्त्वमसीत्यादौ शब्दजन्यज्ञानस्यापि प्रत्यक्षत्वदर्शनान्द्रियकरणकमेव प्रत्यक्षमिति न वियमः । अभावज्ञानस्य प्रत्यक्षत्वेप्यनुपलब्धिकरणकत्वात्। अत एवानुपलब्धिप्रमाणजन्याभावज्ञानस्य प्रत्यक्षेऽन्तर्भावादनुभवस्य पञ्चधा विभागः । सप्रकारकं सविकल्पकम् । अयं घट इति ज्ञानम् । सुखादिप्रत्यक्षन्त्विन्द्रियाजन्यम् । मनसोऽनिन्द्रियत्वात् ईश्वरस्य प्रत्यक्षं प्रमैव । तच्च नेन्द्रियजन्यम्। ईश्वरस्येन्द्रियाभावात्।

१७. आरोपितयोर्भावाभावयोः प्रत्यक्षमयथार्थम् । तदेवान्यथाख्यातिरुच्यते । आरोपितस्य निरुपादानकत्वादारोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातिरेवेति पूर्वैर्व्यवस्थापितत्वात् । आधुनिकास्तु व्यावहारिकप्रातिभासिकयोरपि भावाभावयोर्जीवानाश्रिताविद्यैवोपादानमनिर्वचनीयत्वसाम्यादित्याहुः ।

१८. अनुमिनोमीत्यनुव्यवसायसिद्धं ज्ञानमनुमितिः । पर्वतो वह्निमानिति । उपमिनोमीत्यनुव्यवसायसिद्धं ज्ञानमुपमितिः । यथा मदीया गौरनेन गवयेन सदृशीति ज्ञानम् । शब्दात् प्रत्येमीत्यनुव्यवसाया सिद्धं शाब्दं ज्ञानम् । इदं कल्पयामीत्यनुभवसिद्धमुपपादकज्ञानम् ।

१९. अहमनेनोत्कृष्ट इति ज्ञानं गर्वः । संस्कारजन्या स्मृतिः । सा च यथार्थाऽयथार्थेति द्विविधा । घटं स्मरामीत्याद्यनुव्यवसायसिद्धा । तत्त्वसाक्षात्कारानन्तरं सर्वस्य बाधेपि संसारदशायां विषयस्याबाधात् तज्ज्ञानं प्रमा । संसारदशायामेव बाधश्चेदप्रमा । धारावाहिकबुद्धिस्थले तादृशवृत्तिरूपं ज्ञानमेकमेव । वृत्तेस्स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वात् । अतो न ज्ञानं क्षणिकम् । स्मृतिधारादर्शनात्संस्कारोपि न क्षणिकः ।

२०. कर्म चलनम् । धर्मो विशेषणं घटत्वादि । अनुगतमननुगतं व्याप्यं व्यापकञ्च । सम्बन्धोपि धर्म एव । कार्यस्यानुकूला प्रतिकूला च शक्तिरतीन्द्रिया ।

२१. अभावश्चतुर्विधः । प्रागभावो ध्वंसोऽत्यन्ताभावोऽन्योन्याभाव श्चेति प्रागभाव उपादाननिष्ठः । प्रागभावध्वंसः प्रतियोगिस्वरूपः । प्रतियोगिनाशे तस्यापि नाशः । मुद्गरप्रहारादिना घटध्वंसः । उपादाननिष्ठोऽधिकरणस्वरूपः । तन्नाशे ध्वंसस्यापि नाशः । घटध्वंसध्वंसेपि नष्टो घट इत्येव प्रतीतेर्घटध्वंसध्वंसस्यापि घट एव प्रतियोगीति न घटोन्मज्जनापत्तिः । चैतन्यरूपनित्याधिकरणगतध्वंसस्याधिष्ठानचैतन्यव्यतिरेकेण नित्यता नास्तीति चैतन्यस्वरूपता । एवमारोपितशुक्तिरूप्यादिध्वंसोपीदमवच्छिन्नचैतन्यरूपमेव । कालत्रयेप्यभावोऽत्यन्ताभावः । स च प्रामाणिकप्रतियोगिकोऽप्रामाणिकप्रतियोगिकश्च। आद्यो घटाभावः । द्वितीयश्शशशृङ्गाद्यभावः । द्विविधोपि ध्वंसप्रतियोगी। घटः पटो नेति प्रतीतिसाक्षिकाभावोऽन्योन्याभावः । स एव पृथक्त्वं विभागो भेद इत्युच्यते । अयमनादिस्सादिश्च । ध्वंसप्रतियोगी । अविद्याया- निवृत्तौ तत्परतन्त्राणां सर्वेषां निवृत्त्यवश्यंभावात् । भेदो द्विविधः । सोपाधिको निरुपाधिकश्चेति । आद्यस्तु घटाद्युपाधिभेदादाकाश भेदः । अन्तःकरणाद्युपाधिभेदाद् ब्रह्मभेदः । द्वितीयस्तु घटपटादिभेदः। अद्वितीये ब्रह्मणि प्रपञ्चस्य कल्पितत्वाद् ब्रह्मप्रपञ्चयोर्न पारमार्थिकभेदः।

२२. कार्यं प्रागभावप्रतियोगि । कार्यनियतपूर्ववृत्ति कारणम् । तद्द्विविधम् । उपादानं निमित्तञ्चेति । उपादानं द्विविधमधिष्ठानं परिणामि चेति । जगदाकारेण परिणममाणाविद्याधिष्ठानत्वाद् ब्रह्मणो जगदुपादानत्वम् । द्वितीयमविद्यातन्तुकपालादि । अपरिणामित्वे सति कारणत्वं निमित्तत्वम् । ईश्वररूपेण जगत्स्रष्टृत्वाद् ब्रह्मणो निमित्तत्वञ्च। घटादिकं प्रति दण्डकुलालादिकञ्च ।

२३.असाधारणधर्मो लक्षणम् । तद् द्विविधम् । स्वरूपं तटस्थमिति। सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतेस्सत्यज्ञानादिस्वरूपलक्षणम् । आनन्दो

विषयानुभवो नित्यत्वञ्चेति धर्मा अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इति पद्मपादाचार्योक्तेः । सास्नादिमत्वं गोः । यावल्लक्ष्यमनवस्थितं सद् व्यावर्तकं तटस्थलक्षणम् । यथेश्वरस्य जगज्जन्मादिकारणत्वम् । यथा च पृथिव्या गन्धवत्त्वम् । अस्मन्मते न्यायमते चोत्पत्तिकाले गन्धाभावात् । न्यायमते महाप्रलये परमाणुगन्धानङ्गीकारात् । ब्रह्मणो निखिलजगदध्यासाधिष्ठानत्त्वरूपोपादानत्वञ्च तटस्थम् ।

२४. लक्षणदोषास्त्रयः । अतिव्याप्तिरव्याप्तिरसम्भव इति । अलक्ष्येपि लक्षणसत्त्वमतिव्याप्तिः । लक्ष्यांशे लक्षणाभावोऽव्याप्तिः । लक्ष्यसामान्ये लक्षणाभावोऽसम्भवः । यथा गोः शृङ्गित्वं शबलत्वमेकशफमात्रत्वञ्च।

२५. चिदेकमेव नित्यम् । तद्भिन्नमनाद्यपि सर्वं ब्रह्मज्ञानबाध्यत्वादनित्यम् ॥

**॥ इति श्रीकृष्णावधूतपण्डितविरचिते अद्वैतनवनीते प्रमेयनिरूपणं नाम द्वितीयगोलकम् ॥**

## अथ प्रमाणनिरूपणम् ।

१. प्रमाकरणं प्रमाणम् । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धय इति षट्प्रमाणानि ।

२. तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षम् । तत्तदाकारवृत्त्यवच्छिन्नचैतन्यस्य तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं ज्ञानगतप्रत्यक्षत्वम् । न तु वृत्तिः प्रत्यक्षप्रमा। अविशिष्टचैतन्यस्याजन्यत्वेपि वृत्ते- र्जन्यत्वात्त द्विशिष्टचैतन्यस्य चतुरादिजन्यत्वम् ।" प्रमातृचैतन्यमेव वृत्त्यवच्छिन्नम् । वृत्तिस्तु चक्षुरादिद्वारा बहिर्गत्वा विषयाकारेण परिणमते । तदा योग्यविषयचैतन्यस्य वृत्तिचैतन्यस्याप्यैक्यं भवति । तदेव प्रमातुः प्रत्यक्षम् । वृत्तिविषययोरेकदेशीयत्वमेककालिकत्वञ्च तदवच्छिन्नचैतन्याभेदे प्रयोजकम् । अनुमितावुपनीतभाने च विशेष्यांश एवापरोक्षम्।

३. संयोगस्संयुक्ततादात्म्यं संयुक्ताभिन्नतादात्म्यञ्चेति त्रयस्सन्निकर्षाः। तेषां चैतन्याभिव्यञ्जकवृत्तिजनन उपयोगः । द्रव्यप्रत्यक्षे संयोगः। तद्गतगुणादिप्रत्यक्षे संयुक्तत्तादाम्यम् । गुणादिगतधर्मादिप्रत्यक्षे संयुक्ताभिन्न तादाम्यम् । समवायसंयुक्तविशेषणतादीनामप्रमाणिकत्वेनानङ्गीकारात् । इदानीं घट इत्यादौ रूपवन्नीरूपस्यापि कालस्य प्रत्यक्षत्वम्। तत्र संयुक्तसंयोगस्सन्निकर्ष इति केचित् ।

४. विषयगतप्रत्यक्षत्वन्तु घटादिविषयस्य प्रमात्रभिन्नत्वम् । अधिष्ठानचैतन्यसत्तैव घटादिसत्ता । तदरिक्तारोपितसत्ताया अनङ्गीकारात्। विषयावच्छिन्नचैतन्यं प्रमातृचैतन्यञ्चैकमेव अतो घटादेः प्रमात्रभिन्नत्वम्। तच्च प्रमातृचैतन्यसत्तातिरिक्तसत्ताशून्यत्वम् ।

५. ईश्वरसाक्षि जीवसाक्षीति साक्षिद्वैविध्यात् प्रत्यक्षमपि द्विविधम्। ईश्वरसाक्षिणोऽनादित्वेपि सृज्यमानप्राणिकर्मवशेनेश्वरोपाधिभूतमायायास्स्र ष्टव्यं पालयितव्यमित्याद्याकारा वृत्तिविशेषा जायन्ते । तत्प्रतिबिम्बितेशचैत न्यमपि सादि भवतीति तदैक्षतेति श्रुत्युपपत्तिः । ईश्वरप्रत्यक्षे न वृत्तिरपेक्षिते । ब्रह्मचैतन्यस्य सर्वोपादानतया सर्वतादात्म्यापन्नत्वेन स्वसंसृष्टसर्वावभासकत्वात् । जीवप्रत्यक्षे तु वृत्तिरावश्यकी । तस्याविद्योपाधिकतया सर्वगतत्वेप्यनुपादानत्वेनासङ्गित्वादिति विवरणे इति प्रत्यक्ष निरूपणम् ।

६. अनुमितिकरणमनुमानम् । तच्च व्याप्तिज्ञानम् । संस्कारो व्यापारः । न तु लिङ्गपरामर्शो व्याप्तिस्मरणञ्च । पक्षधर्मताप्रत्यक्षानन्तरमु द्बुद्धे व्याप्त्यनुभवजन्यसंस्कारे सति अनुमित्युत्पत्तेरानुभविकत्वेनान्वयव्यतिरे काभ्यां व्याप्तिज्ञानस्यैवानुमितिकरणत्वम् । परामर्शादिरन्वयव्यतिरेका- भावात्। तथा च व्याप्त्यनुभवः करणम् । तज्जन्यसंस्कारो व्यापारः। तदुद्बोधकत्वेन पक्षधर्मताज्ञानं सहकारि । अनुमितिः फलम् । व्याप्तिज्ञानस्य वह्निज्ञानांश एव करणत्वम् । वन्ह्यंश एवानुमितित्वमनुमितेः। न तु पक्षांशे पर्वतज्ञानस्य प्रत्यक्षत्वात् ।

७. अनुमानं द्विविधम् । स्वार्थं परार्थञ्चेति । स्वार्थं स्वानुमितिकरणम् । न्यायप्रयोज्यं परार्थानुमानम् । अवयवत्रयं न्यायः । व्यवहारे भाट्टनय इत्यङ्गीकारात् । तच्च प्रतिज्ञाहेतूदाहरणानि । उदाहरणोपनयनिगमनानि वा । पर्वतो वह्निमान् धूमात् । महानसवदित्यादावेतेनैव व्याप्तिपक्षधर्मतयोरुपदर्शनसम्भवेऽधिकस्य वैय्यर्थ्यात् ।

८. व्याप्तिश्चाव्यभिचरितसहचारदर्शनाद् गृह्यते । सा चान्वयमुखेनैव । सर्वस्यापि ब्रह्माद्युपादाननिष्ठात्यन्ताभावप्रतियोगित्वेन केवलान्वयित्वाभावा त्तन्व्याप्त्यभावः । साधनेन साध्यसाधने साध्याभावहेत्वभावयोर्व्याप्तेरनुयोगाद नुमितिं प्रत्यहेतुत्वाव्द्यतिरेकव्याप्तिरपि नास्ति । पृथिव्यामितरभेदज्ञानन्त्वर्था [illegible] । [illegible]ान्वयव्यतिरेक्यपि न । इत्यनुमाननिरूपणम् ।

९. सादृश्यप्रमाकरणमुपमानम् । गवयनिष्ठगोसादृश्यज्ञानं करणम् । गोनिष्ठगवयदृश्यज्ञानं फलम् । अतिदेशवाक्यार्थज्ञानजन्यसंस्कारो व्यापारः । केचित्तुसर्वत्र प्रमाणजन्यज्ञानस्यापूर्वहानोपादानादिप्रवृत्तिजनकत्वनियमात् स्वकीयगोनिष्ठगवयसादृश्यज्ञानं न फलम् । तदभावात् । किन्तु नैय्यायिकोक्तं गवयपदवाच्यत्वज्ञानमेव । तस्य प्रवृत्तिजनकत्वादित्याहुः ॥ इत्युपमाननिरूपणम् ।

१०. अबाधिततात्पर्यविषयीभूतसंसर्गवद्वाक्यं प्रमाणशब्दः । शाब्दबोध आकाङ्क्षा योग्यता तात्पर्यज्ञानमासत्तिश्च कारणम् । पदानां परस्परजिज्ञासाऽऽकाङ्क्षा । आकाङ्क्षासमर्पकपदाप्रयोगेऽध्याहृत्य योजना । अर्थाध्याहारे शाब्दत्वानुपपत्तिः । पदार्थसंसर्गाबाधो योग्यता । पदार्थसंसर्गानुभवजननयोग्यत्वं तात्पर्यम् । अव्यवधानेन पदजन्यपदार्थोप स्थितिरासत्तिः । सैव व्यापारो भवति । शाब्दबोधः फलम् ।

११. पदार्थो द्विविधः । शक्यो लक्ष्यश्च । शक्तिज्ञाप्यश्शक्यः । शक्तिः पदार्थान्तरमित्युक्तम् । अनेकव्यक्तिस्थले जातौ शक्तिः एकव्यक्तिस्थले व्यक्तौ । शक्तिनिरूपकं शक्तं पदम् । लक्षणाज्ञाप्यो लक्ष्यः । शक्यसम्बन्धो लक्षणा । सा द्विविधा । केवललक्षणा लक्षितलक्षणेति । साक्षाच्छक्यसम्बन्ध आद्या । गङ्गायां घोषः ।

शक्यपरम्परासम्बन्धे द्वितीया । द्विरेफपदस्य भ्रमरपदद्वारा मधुकरे । सिंहो माणवक इत्यत्र सिंहशब्दस्य सिंहसम्बन्धिक्रौर्यसम्बन्धो माणवके। केवललक्षणा त्रिविधा । जहत्यजहती जहदजहती चेति।विषं भुङ्क्ष्वेत्यादौ शक्यार्थमनन्तर्भाव्य शत्रुगृहे भोजननिषेधो लक्ष्यते इति जहल्लक्षणा। शुक्लो घट इत्यादौ शक्यार्थं शुक्ल रूपमन्तर्भाव्यैव तद्वति वृत्तेरजहल्लक्षणा। विशिष्टवाचकपदस्य विशेषणांशत्यागे सोऽयं देवदत्तस्तत्त्वमसीत्यादौ जहदजहल्लक्षणा । केचित्तु तत्त्वमसीत्यादौ शक्यार्थैकदेशत्यागेपि न लक्षणा । शक्यसम्बन्ध्यन्यार्थस्वीकाराभावात्।काकेभ्यो दधि रक्ष्यतामि त्यादौ केवलशक्यकाकापरित्यागेन दध्युपघातकत्वसम्बन्धेन बिडालादीनामा पग्रहणाज्जहदजहल्लक्षणेत्याहुः । लक्षणाबीजं तात्पर्यानुपपत्तिः ।

१२. शक्तिः पदे । लक्षणा पदवाक्ययोः । अर्थवादवाक्यस्य प्राशस्त्ये लक्षणाया आवश्यकत्वात् । एकपदे लक्षणामङ्गीकृत्यान्येषां तात्पर्यग्राहकत्वं न च वाच्यम् । प्राशस्त्यरूपलक्ष्यार्थातिरिक्ततात्पर्यभावात्। अन्ये तु शक्तिज्ञाप्यार्थबोधकं शक्तमित्यङ्गीकारात् पदवद्वाक्येऽपि शक्तिः। तथा च वाक्ये लक्षणाया नानुपपत्तिरित्याहुः । तस्मादर्थवादवाक्यस्य पदस्थानीयतया विधिवाक्येनैकवाक्यत्वादर्थवादवाक्यस्थपदानां पदैक-वाक्यता । यत्राभिन्नसंसर्गकवाक्ययोराकाङ्क्षावशान्महावाक्यार्थबोधकत्वं तत्र वाक्यैकवाक्यता ।

१३. लोके वेदे च कार्यपराणामिव सिद्धार्थपराणामपि वाक्यानां प्रामाण्यम् । भारतादिलौकिकवाक्यानां सजातीयोच्चारणानपेक्षोच्चारणात् पौरुषेयत्वम् । वेदानां तदभावादपौरुषेयत्वम् । वियदादिवत् सृष्टिकाल उत्पत्तिः प्रलये नाश इति वेदानां न क्षणिकत्वम् । अस्य महतो भूतस्य निश्वसितमेतदृग्वेद इत्यादिश्रुतेरीश्वरादुत्पत्तिः । इत्यागमनिरूपणम्।

१४. तदन्यथानुपपत्त्या तत्कल्पनमर्थापत्तिः । उपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । पीनो देवदत्तो दिवा न भुङ्क्ते। रात्रिभोजनमुपपादकम् । पीनत्वमुपपाद्यम् । दृष्टार्थापत्तिरियम् । श्रुतार्थापत्तिर्द्विविधा । अभिधानानुपपत्तिरभिहितानुपपत्तिः । पदाध्याहारे

प्रथमा । वाक्याध्याहारेऽपि । द्वितीया यथा । स्वर्गकामो ज्येतिष्टोमेन यजेतेत्यादौ क्षणिकयागस्य स्वर्गसाधनत्वानुपपत्त्याऽपूर्वं कल्पत इत्यर्थापत्तिः ।

१५. अभावज्ञाने योग्यानुपलब्धिः करणम् । अनुपलब्धौ योग्यत्वञ्च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् । स्फीतालोकवर्ति-भूतलेऽत्र घटोऽस्ति चेदुपलभ्येतेति घटसत्त्वेनापादितोपलब्धिरूपप्रतियोगिक त्वम् । अभावेन्द्रिययोस्सन्निकर्षाभावाद् घटाभावाकारावृत्तिनेन्द्रियजन्या किन्त्वनुपलब्धिजन्येत्यभावप्रत्यक्षे तस्या मानान्तरत्वम् ।

१६. यद्यपि परिशेषः प्रमाणान्तरं परासिद्धवस्तुसाधने । स च प्रसक्तस्य प्रतिषेधेऽवशिष्टविशिष्टकल्पनम् । तथापि तस्यार्थापत्तावन्तर्भा वान्न पृथगुक्तिः । तर्कस्यापि दूषणानुमानेऽन्तर्भावः ।

१७. प्रमाणानां प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वम् । आगन्तुकभावाकारणानपेक्षज्ञानसामान्यग्राहक सामग्री प्रयोज्यत्वमुत्पत्तौ स्वतस्त्वम् अदृष्टादिसापेक्षत्वादागन्तुकेति। दोषाभावासापेक्षत्वाद्भावेति। दोषासहकृतस्वाश्रयसामग्रीमात्रग्राह्यत्वं ज्ञप्तौ स्वतस्त्वम् । स्वं प्रामाण्यं तदाश्रयो वृत्तिज्ञानं तद्ग्राहिका दोषासहकृता या सामग्री साक्षिज्ञानं तद्ग्राह्यत्वम् । नैय्यायिकानुमानवारणाय मात्रेति । अप्रामाण्यस्य तु विसंवादादिलिङ्गकानुमितिविषयत्वात् परतस्त्वम् ।

१८. प्रामाण्यं द्विविधम् । व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वमिति । आद्यं वियदादिविषयकप्रमाणेषु । व्यवहारदशायां बाधाभावात् । द्वितीयन्तु जीवब्रह्मैक्यपरेषु तत्त्वमसीत्या-दिषु।

॥ इति श्रीकृष्णावधूतपण्डितविरचिते अद्वैतनवनीते
प्रमाणनिरूपणं नाम तृतीयगोलकम् ॥

---

## ॥ अथ दोषनिरूपणम् ॥

१. सर्वशास्त्रवादेषु तार्किकस्य मध्यवृत्तितया तन्मतानुसारेण दोषा ज्ञेयाः ।

व्यवहारे भट्टनयस्तार्किकस्याथवा नयः ।
विरोधो यत्र चास्माकं त्यज्यते तत्र तन्मतम् ॥

इति तोटकाचार्योक्तेः । तत्त्वबुभुत्सूनां कथा वादः । मध्यस्थसम्मतः पूर्वोत्तरपक्षवाक्यसन्दर्भः कथा । तत्र दोषो निग्रहस्थानम् । प्रमाप्रतिबन्धको दोषः । वादिविशेष्यकप्रतिवाद्यवधिकापकर्षप्रकारकमध्यस्थवृत्तिज्ञानप्रयोजकत्वं निग्रहस्थानत्वम् । तानि च

| | | |
|---|---|---|
| १. प्रतिज्ञाहानिः | २. प्रतिज्ञान्तरम् | ३.प्रतिज्ञाविरोधः |
| ४. प्रतिज्ञासन्यासः | ५. हेत्वन्तरम् | ६. अर्थान्तरम् |
| ७.निरर्थकम् | ८. अविज्ञातार्थकम् | ९. अपार्थकम् |
| १०. अप्राप्तकालम् | ११. न्यूनम् | १२. अधिकम् |
| १३. पुनरुक्तम् | १४. अननुभाषणम् | १५. अज्ञानम् |
| १६.अप्रतिभा | १७. विक्षेपो | १८. अमतानुज्ञा |
| १९. पर्यनुयोज्योपेक्षणम् | २०. निरनुयोज्यानुपयोगः | २१. अपसिद्धान्तः |

२२. हेत्वाभासश्चेति द्वाविंशतिः

२. (१) प्रतिज्ञातस्य त्यागः प्रतिज्ञाहानिः । पर्वतो वह्निमान् प्रमेयत्वादित्युक्तेऽनैकान्त्येऽभिहिते तर्हि माभूत् पर्वतो वह्निमानिति।

(२) सामान्यत उक्तस्य परेण दोषोद्भावने कृते विशेषेण विन्यासः प्रतिज्ञान्तरम् । द्रव्यं प्रत्यक्षमित्युक्त आकाशादौ बाधेऽभिहिते रूपवद् द्रव्यमित्यादि । (३) स्ववाक्ये मिथो व्याघातः प्रतिज्ञाविरोधः। मे माता वन्ध्येति । (४) स्वोक्तापलापः प्रतिज्ञासन्यासः । अग्निरनुष्ण इत्युक्ते प्रमाणविरोधाभिधाने सति न मया तथोक्तमाग्निरुष्ण इत्येवोक्तमिति। (५) उक्त हेतौ दोषोद्भावने विशेषणान्तरप्रक्षेपो हेत्वन्तरम् । शब्दोऽनित्य ऐद्रियकत्वादित्युक्ते सामान्ये व्यभिचारेऽभिहिते सामान्यवत्वं हेतुविशेषणम्। (६) प्रकृतानुपयुक्तार्थकथनमर्थान्तरता। घटो द्रव्यं प्रमेयत्वादित्युक्ते साध्यमनुमीयत अनेनेति करणव्युत्पत्त्या प्रमेयत्वहेतुरनुमानशब्दवाच्यं भवतीति । (७) अवाचकपदप्रयोगो निरर्थकम्। शब्दो नित्यः कचटतपानां जबगडदत्वादिति ।(८) त्रिवारमुक्तेपि परिषदाद्यज्ञानार्थक पदादिप्रयोगोऽविज्ञातार्थम् । कश्यपतनयाधृतिहेतुस्त्रिनयनतनयवाह्नसनामवानिति । भूधरश्शिखिमान् । (९) अनन्वितप्रयोगोऽपार्थकम्। कुण्डमजाजिनं षडपूजा इति । (१०) क्रमविपर्यासोऽप्राप्तकालम्।

उद्देश्यं प्रथमं पश्चाद्विधेयं साधनं ततः ।
परेण परदोषोक्तिः स्वसिद्धान्तैस्स्वसाधनम् ॥
अय वादक्रमस्तत्राप्राप्तकालं विपर्यये ।

इत्युक्तेः । (११). आवश्यकानुक्तिर्न्यूनम् । (१२) विवरणादिना पुनरुक्तिरधिकम् । (१३) प्रतीतार्थस्य प्रयोजनं विनोक्ते पुनरुक्तम्। (१४) वाद्युक्तस्य मध्यस्थेनानूदितस्याप्युत्तरानुक्तिरननुभाषणम् । (१५) द्विवारमुक्तस्य परिषदनूदितस्याप्यप्रतिपत्तिरज्ञानम् (१६) वाद्युक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा । (१७) केनचिद्व्याजेन कथाविच्छेदो विक्षेपः। (१८) वाद्युक्तस्येष्टापादनं मतानुज्ञा । त्वं परस्त्रीगामी पुरुषत्वादित्युक्ते जारत्वं प्रसज्येतेति । (१९) अवश्योद्भाव्यदोषानुद्भावनं पर्यनुयोज्योपेक्षणम्। (२०) अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः । स चतुर्विधः । छलं हान्याद्याभासोऽप्राप्तकाले ग्रहणं जातिरिति । अर्थान्तरं प्रकल्प्यदूषणं छलम् । भ्रान्त्या निग्रहस्थानोद्भावनं

हान्याद्याभासः। कालमतिक्रम्य दोषोद्भावनमप्राप्तकाले ग्रहणम् । दूषणासमर्थमुत्तर जातिः साधर्म्यसमादिभेदेनेयं चतुर्विंशतिधा । एतद्विस्तरस्तु मत्कृते लोकोपकारे द्रष्टव्यः । (२१) स्वसिद्धान्तविरोधोऽप सिद्धान्तः ।

३. हेत्वाभासस्तु व्यभिचारादयः । असाधारण्यानुपसंहारित्वयोर्न दोषत्वम् । केवलान्वय्यनङ्गीकारात् । विरोधोपि न दोषान्तरम् । व्यभिचारेण चारितार्थ्यात् । व्यतिरेकव्याप्त्यभावाच्च । प्रकरणसाम्यमाभास साम्यञ्च दोषान्तरम् । एकस्यैव हेतोस्साध्यतदभावोभयसाधकत्वे वा प्रकरणसाम्यम् । शब्दो नित्य आकाशवृत्तित्वादिति । आभाससाम्यन्तु वादिप्रतिवादिमध्यस्थानामप्यसिद्धवस्तुसाधन उपयोगिव्याप्तिपक्षधर्मतादि-साम्यं । अयं घट एतद्धटत्वाभाववान् घटत्वात् घटान्तरवत् । इदमाभासितानुमानं । एतत्साम्यज्ञानमनुमितेः प्रामाणिकत्वज्ञानप्रतिबन्ध कम् ।

४. अन्ये हेत्वाभासा नैय्यायिकवद्द्रष्टव्याः असिद्धिभेदास्तर्कभेदा अन्योन्याश्रयादयो मत्कृते न्यायनवनीते लोकोपकारे च द्रष्टव्याः । निश्चितसाध्याभाववति पक्षादन्यत्र हेतुसंशयो निश्चितहेतुमति साध्यसंशयश्च सन्दिग्धानेकान्त्यम् । पक्षांशे साध्यसिद्धौ पक्षे साध्यांशसिद्धौ च सिद्धसाधनता । एवमेव भागासिद्धिरपि । पक्षांशस्यासिद्धावंश आश्रयासिद्धिः ।

॥ इति श्रीकृष्णावधूतपण्डितविरचिते अद्वैतनवनीते दोषनिरूपणं नाम चतुर्थगोलकम् ॥

---

## अथ मतभेदनिरूपणम्

१. **उपादानविचारः** । ब्रह्मण उपादानत्वं नाम अविद्यया वियदादिप्रपञ्चरूपेण विवर्तमानत्वम् । प्रकृतेरुपादानत्वं तु परिणामित्वम् । उपादानत्वाभिमतवस्तुसत्ताभिन्नसत्ताकत्वे सति तदवस्थाविशेषत्वम्

विवर्तत्वम् । तादृशवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषत्वम् परिणामित्वम् ।

२. शुद्धब्रह्मैवोपादानम् । जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेरिति सङ्क्षेपशारीरपक्षः । सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वररूपमेव ब्रह्म जगदुपादानम् ''अन्तस्तद्धर्मोपदेशात्'' ''सर्वत्र प्रसिद्धोपदेशात्'' इति सूत्रभाष्ये सर्वोपादानप्रयुक्तसर्वात्मकत्वस्य जीवव्यावृत्तेश्वरलिङ्गोक्तेरिति विवरणपक्षः ।

३. प्रपञ्चस्येश्वराश्रितमायापरिणामत्वात्तत्रेर उपादानम् । अन्तःकरणादेरीश्वराश्रितमायापरिणाममहाभूतोपसृष्ट जीवाविद्याकृतभूत सूक्ष्म कार्यत्वात्तत्र जीवेश्वरयोरुभयोरुपादानत्वमिति मायाविद्ययोर्भेदवादिनः । वियदादेरीश्वराश्रितमायापरिणामत्वात् तत्रेश्वर उपादानम् । अन्तःकरणादेर्जीवाश्रिताविद्यामात्रपरिणामत्वात् तत्र जीव एवोपादानमिति तदेकदेशिनः । अन्तःकरणादेर्जीवतादात्म्यप्रतीत्या जीव एव तदुपादानम् । अध्यासभाष्येऽन्तःकरणादीनां जीवेऽध्यासस्य दर्शितत्वादिति केचित् ।

४. अन्ये तु व्यावहारिकप्रपञ्चस्य निरवयवब्रह्मैवोपादनम् । जीवस्तु प्रतिभासिकस्वाप्नप्रपञ्चस्य । ''आत्मनि चैवं विचित्राश्च हि'' इति सूत्रेण विवर्तवादाभिप्रायेण जीवात्मनि स्वरूपानुपमर्देन स्वाप्नप्रपञ्चसृष्टिवत् ब्रह्मणि वियदादिसृष्टिरिति सिद्धान्तितत्वादित्याहुः ।

५. अपरे तु जीव एव स्वप्नदृष्टवत् स्वस्मिन्नीश्वरादिसर्वकल्पकतया सर्वप्रपञ्चस्योभयविधं कारणमिति वदन्ति ।

६. जीवाश्रितमायाविषयीकृतं ब्रह्मैव जडप्रपञ्चाकारेण विवर्तमानत्वादुपादानम् । माया तु सहकारिमात्रम् । न तु कार्यानुगतमिति वाचस्पतिमिश्राः ।

७. मायाशक्तिरेवोपादानम् । न तु ब्रह्म । किन्तु जगदुपादानमायाधिष्ठानत्वेनौपचारिकमुपादानत्वमिति सिद्धान्दमुक्तावलीकाराः । इत्युपादानविचारः ।

८. अथ जीवेश्वरविचारः । अनादिरनिर्वाच्या मूलप्रकृतिः । तत्र चिन्मात्रसम्बन्धिनी माया । तस्यां चित्प्रतिबिम्ब ईश्वरः । तत्रैवावरणविक्षेपशक्तिमत्यविद्या । तस्यां परिच्छिन्नानेकप्रदेशेषु चित्प्रतिबिम्बो जीव इति प्रकटार्थविवरणे ।

९. एकैव मूलप्रकृतिर्विक्षेपशक्तिप्राधान्येन मायाशब्दितेश्वरोपाधिः। आवरणप्राधान्येनाविद्याशब्दिता जीवोपाधिः । अत एव जीवस्याऽज्ञानानुभवो नेश्वरस्य । ब्रह्म नास्ति न प्रकाशत इति व्यवहारयोग्यत्वमावरणत्वम्। तत्तज्जीवसाधारणसुखदुःखाद्यनुकूला विक्षेपशक्तिरिति तत्त्वविवेके ।

१०. अविद्यायां चित्प्रतिबिम्ब ईश्वरः । अन्तःकरणेषु चित्प्रतिबिम्बो जीवः । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति श्रुतेरिति सङ्क्षेपशारीरके!

११. चित्रदीपे तु स्थूलसूक्ष्मदेहद्वयस्याधिष्ठानतया विवर्तमानं तदनवच्छिन्नचैतन्यं कूटवन्निर्विकारत्वेन स्थितत्वात् कूटस्थम् । तत्र कल्पितेऽन्तःकरणे प्रतिबिम्बितं चैतन्यं संसारी जीवः अनवच्छिन्नचैतन्यं ब्रह्म । तदाश्रिते मायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वर इत्युक्तम् ।

१२. ब्रह्मानन्दे तु परमात्मा मायातत्कार्योपाधिरहितश्शुद्धः मायोपहित ईश्वरः । अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः। पञ्चीकृतभूतकार्यसमष्टिस्थूलशरीरोपहितो विराट्पुरुष इत्यवस्थाचतुष्टयमेकस्यैव परमात्मनः । अस्मिंश्च चित्रपटस्थानीये चित्रस्थानीयः प्रपञ्चः स्थावरजङ्गमात्मकः । यथा चित्रगतमनुष्याणां चित्राधारवस्त्रसदृशा वस्त्राभासा लिख्यन्ते तथा परमात्माध्यस्तदेहिनामधिष्ठानचैतन्यसदृशाश्चिदाभासाः कल्प्यन्ते । ते च जीवनामानस्संसरन्तीति ।

१३. अज्ञानमेकमेव जीवेश्वरयोरुपाधिः । तत्र बिम्बस्थानीय ईश्वरः ।प्रतिबिम्बा जीवाः ।अज्ञानप्रतिबिम्बितस्य जीवस्यान्तःकरणरूपाज्ञानपरिणामभेदो विशेषाभिव्यक्तिस्थानं सूर्यातपस्य दर्पण इवेति विवरणपक्षः ।

१४. केचित्तु घटाकाशवदन्तःकरणावच्छिन्ना जीवास्तदनवच्छिन्न ईश्वरः । प्रतिबिम्बिपक्षेऽपि उपाध्यनन्तर्गतस्यैव चैतन्यस्य बिम्बत्वम्। जलचन्द्रन्यायादिति ।

१५. अपरे तु न प्रतिबिम्बो जीवः । नाऽप्यवच्छेदः । किन्तु कौन्तेयस्य राधेयत्ववदविकृतस्यैव ब्रह्मण एवाविद्या जीवभावः। ब्रह्मैव स्वाविद्यया संसरति स्वाविद्यया विमुच्यते इति बृहदारण्यभाष्योक्तेः।

राजसूनोस्स्मृतिप्राप्तौ व्याध भावो निवर्तते ।
तथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥

इति वार्तिकोक्तेश्च । एवञ्च स्वाविद्याया जीवभावमाप्तस्यैव ब्रह्मणः प्रपञ्चकल्पकत्वादीश्वरोऽपि सर्वज्ञत्वादिधर्मैस्साकं स्वप्नोपलब्धदेवतावज्जीव कल्पित इति वदन्ति ।

१६. **अथ जीवैकानेकत्वविचारः** । एक एव जीवः । तस्यैकमेव शरीरं सजीवम् । अन्यानि स्वप्नदृष्टशरीराणीव निर्जीवाणि। तदज्ञानकल्पितं सर्वं जगत् । तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वोऽपि व्यवहारः । बद्धमुक्तभेदो नास्ति । शुकमुक्त्यादिकमपि स्वप्नवत् कल्पितमिति केचित् ।

१७. हिरण्यगर्भ एक एव ब्रह्मप्रतिबिम्बो मुख्यो जीवः । अन्ये तु तत्प्रतिबिम्बभूता जीवा अविद्यायां जीवाभासास्संसारिण इति सविशेषानेकशरीरैकजीववादिनः । हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यजीवत्वमित्यत्र नियामकाभावादेक एव जीवोऽविशेषेण सर्वशरीरमधितिष्ठतीत्यविशेषानेकशरीरैकजीववादिनः ।

१८. ''प्रतिषेधादिति चेन्न शरीरादि''ति सूत्रभाष्यानुसारेण बद्धमुक्तव्यवस्थाङ्गीकारादन्तःकरणोपाधिभेदेनानेके जीवा इत्यनेकजीव-वादिनः ।

१९. **अथ बन्धमोक्षविचारः** । शुद्धब्रह्माश्रयकं तद्विषयकमेवाज्ञानम् तच्च सांशं क्वचिदुपाधौ ब्रह्मज्ञाने जातेंऽशेन निवर्तते । उपाध्यन्तरेष्वंशेनानुवर्तत इति बद्धमुक्तव्यवस्थां केचिदाहुः । अपरे तु नाज्ञानं ब्रह्माश्रयं किन्तु जीवाश्रयं ब्रह्मविषयम् । तच्चान्तःकरणप्रतिबिम्बेषु जीवेषु व्यक्तिषु जातिरिव तिष्ठति । तत्रोत्पन्नज्ञानं नष्टां व्यक्तिं जातिरिव त्यजति स एव मोक्षः । अन्यानाश्रयति यथापूर्वं स एव बन्धः । इतरे तु प्रतिजीवमविद्याभेदः । प्रपञ्चस्तु सर्वतन्त्वारब्धपटवत् सर्वाविद्याजन्यः । एकस्य मुक्तौ तदविद्यानाशे तत्साधारणप्रपञ्चनाशः। एकतन्तुनाशे पटैकदेशस्येव । अन्यैरन्यांशस्य निवृत्तिरिति ।

२०. पुनरन्ये तत्तदज्ञानकृतप्रातिभासिकरजतवत्तत्तदविद्याकृतः प्रपञ्चः प्रतिपुरुषं भिन्नः । ऐक्यबुद्धिस्तु भ्रमः । पुनरेके वदन्ति। जीवाश्रिताविद्यातो भिन्नेश्वराश्रितमायैव प्रपञ्चकारणम् । जीवानामविद्या तु प्रातिभासिकस्वाप्ने स्वावरणे चोपयुक्तेति ।

२१. **अथावरणविचारः** । द्विविधं विषयावरकमज्ञानम् । विषयाश्रितमेकं विक्षेपोपादानभूतम् । जीवाश्रितमन्यत् । घटमहं न जानामीत्यनुभविकम् । वाचस्पत्यनुसारिणस्तु नयनपटलवत् पुरुषाश्रितमेवाज्ञानं विषयावरणम् । तदतिरेकेण विषयाश्रिताज्ञाने प्रमाणाभावः । सर्वस्य प्रपञ्चस्य जीवाज्ञानविषयीकृतब्रह्मविवर्तत्वादिति । अपरे त्वज्ञानस्य शुक्तिरजतादिपरिणामोपपत्त्या विषयाश्रितमेवाज्ञानं तदावरणमित्याहुः ।

२२. चैतन्यमात्रावरकमेकमेवाज्ञानमिति पक्षे विषयावच्छिन्नप्रदेशे वृत्त्युपगमेन खद्योतादिप्रकाशेन तमस इवैकदेशनाशो वा भीतभटवदपसरणं वाऽभिभवः । अज्ञानानेकत्वपक्षे यथा ज्ञानप्रागभावानामनेकेषां सत्त्वेऽप्येकज्ञानोदय एक एव प्रागभावो निवर्तते । संशयादिजननशक्ततया तदावरणरूपेषु प्रागभावान्तरेषु सत्स्वपि विषयावभासः तथैकज्ञानोदय एकमेवाज्ञानं निवर्तते । अज्ञानान्तरेषु सत्स्वपि विषयावभास इत्यप्पय्यदीक्षितकृतसिद्धान्तलेशसङ्ग्रहवाक्येन । एतेन प्रागभावस्यापि विषयावरकत्वमुक्तमित्यवगन्तव्यम् ।

२३. **अथ साक्षिविचारः** । देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य साक्षादीक्षणान्निर्विकारत्वाच्च साक्षीत्युच्यत इति कूटस्थदीपे । तत्त्वप्रदीपिकायान्तु मायाशबलिते सगुणे परमेश्वरे केवलो निर्गुण इति विशेषणानुपपत्तेस्सर्वप्रत्यग्भूतं विशुद्धं ब्रह्म जीवाभेदेन साक्षीति प्रतिपाद्यत इति । कौमुद्यान्तु ''एको देव'' इति श्रुतेः परमेश्वरस्यैव रूपभेदः कश्चिज्जीवः । प्रवृत्तिनिवृत्त्योरनुमन्ता स्वयमुदासीन स्साक्षी । स च प्राज्ञ इति । केचिदविद्योपाधिजीव एव साक्षी ''एको देव'' इति मन्त्रस्तु ब्रह्मणो जीवभावाभिप्रायेणेति वदन्ति । अन्येत्वन्तःकरणोपधानेन जीवस्साक्षी । तदवच्छेदेन प्रमाता। सुषुप्तावपि संस्काररूपेणान्तःकरणसत्वात्तदपि साक्षीति ।

२४. साक्षिणोऽज्ञानावृतत्वं साक्ष्यानन्दस्याप्यनावृतत्वं विवरण उक्तम् । अहङ्कारानवच्छिन्नं चैतन्यम् देहान्तर इव स्वाप्रपदार्थाधिष्ठानम्। केचित्त्वहङ्कारोपहितं जीवप्रतिबिम्बरूपचैतन्यमात्रमधिष्ठानमिति ।

२५. **अथ सृष्टिविचारः** । सृष्टिर्द्विविधा । दृष्टिसृष्टिस्सृष्टिदृष्टि-रिति। कल्पितस्य पूर्वमज्ञातस्य सत्त्वमनुपपन्नमिति सर्वोऽपि जाग्रत्प्रपञ्चो दर्शनसमय एवोत्पन्नो भवति । दृष्टेः पूर्वं घटाद्यभावेन घटादृष्टेश्चक्षुस्सन्निक र्षानुविधानप्रतीतिर्न युज्यते । अथ स्वाप्रपदार्थानुभववज्जाग्रद्धटाद्यनुभवोऽपि न चाक्षुष इति दृष्टिसृष्टिवादिनः । अथैवंरीत्या जाग्रत्प्रपञ्चस्य कल्पितत्वाङ्गीकारे कल्पकः कः । न निरुपाधिकं ब्रह्म । मोक्षेऽपि साधनान्तरनिरपेक्षकल्पकस्य सत्वेन प्रपञ्चानुवृत्त्या मोक्षस्यापि संसाराविशेषप्रसङ्गात् । नाप्यविद्योपाधिकम् । त्वन्मत अविद्यायास्सादि त्वेन तस्या अपि कल्पनीयतया तत्कल्पनात् प्रागेव कल्पकसिद्धेर्वक्तव्यत्त्वेना न्योन्याश्रयादिति चेन्न । पूर्वपूर्वकल्पिताविद्योपहितमुत्तरोत्तराविद्या-कल्पकम् । बीजाङ्कुरन्यायेनानादित्वादित्याहुः ।

२६. अन्ये त्वस्मदाद्यज्ञातायास्सत्त्वमभ्युपगम्यते । तथा चाविद्याया अनादित्वादविद्याविषये दृष्टिसृष्टिर्नास्ति तत्कल्पकोऽपि न । किन्तु प्रपञ्चमात्र एव दृष्टिसृष्टिस्तत्कल्पक अविद्योपाधिक आत्मेत्याहुः ।

२७. अपरे तु जाग्रत्प्रपञ्चसर्गादिर्न कोऽपि कल्पकः । तर्ह्यात्मन आकाशस्सम्भूत इत्यादिश्रुतेः कोऽर्थ इति चेत् । निष्प्रपञ्चब्रह्मात्मैक्ये तात्पर्यात् । अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिर्भवतीति तत्प्रतिपत्त्युपायतया श्रुतिषु सृष्टिप्रलयोपन्यासो न तत्र तात्पर्यमिति भाष्योद्घोषादिति ।

२८. सिद्धान्तमुक्तावलीकारास्तु दृश्यप्रपञ्चतादात्म्यापन्नज्ञानस्वरूपमेव प्रपञ्चस्याद्यक्षणावच्छिन्नं सत् प्रपञ्चस्य सृष्टिरित्युच्यते । अतस्स्वप्रकाशज्ञानस्वरूपमेव विश्वसृष्टिर्दृग्दृश्ययोरभेतात् ।

ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः ॥

इति स्मृतेति ।

२९. सृष्टिदृष्टिस्त्वीश्वरसृष्टमज्ञातसत्ताकमेव विश्वम् । तत्तद्विषयप्रमाणावतरणष तस्य तस्य दर्शनं भवति । प्रत्यक्षं प्रति विषयस्य कारणत्वेन प्रपञ्चस्य ज्ञानसमयत्वायोगात् कार्यकारणभावस्य भेदनिबन्धनत्वान्ना भेदः प्रपञ्चज्ञानयोरित्यद्वैताचार्याः । न च तर्हि प्रपञ्चस्य सत्यत्वं स्यात् । तत्सृष्टिप्रलयोः श्रुत्युक्तत्वात् प्रत्यक्षादिप्रतिपन्नार्थक्रियाकारित्वाच्चेति वाच्यम् । प्रपञ्चस्याधिष्ठानसंस्कारदोषरूपत्वेन कारणत्रया- जन्यत्वाज्ज्ञानैकनिवर्त्यत्वरूपमिथ्यात्वाङ्गीकारादिति ।

३०. **अथ मिथ्यापदार्थस्यार्थक्रियाकारित्वविचारः** । मिथ्याप्रपञ्चस्यार्थक्रियाकारित्वं स्वप्नप्रपञ्चवत् । साधारणधर्मस्तु स्वसमानसत्ताकार्थक्रियाकारित्वम् । स्वप्नकालीनसुखभयादिकं जाग्रत्सुखादिवन्व्यावहारिकसत्यमेव न तु प्रातिभासिकम् । प्रबोधानन्तरम् बाधाभावादनुवर्तनाच्चेत्यद्वैतविद्याचार्याः ।

३१. ननु प्रपञ्चगतमिथ्यात्वस्य मिथ्यात्वे सत्यत्वमेव प्राप्तमन्यथाऽद्वैतहानिरिति चेन्न । मिथ्यात्वस्यापि प्रपंञ्चसमसत्ताकत्वेन स्वविरुद्धसत्यत्वप्रतिक्षेपकत्वात् । . धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे धर्मिसमसत्त्वं तंत्रमित्युभयवादि सिद्धमित्यद्वैतदीपिकाकारः ।

३२. स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षत इतीक्षतिकर्माधिकरण ईक्षतिकर्मत्वेन निर्दिष्टं यन्निर्गुणं ब्रह्म तदेव ध्यायतिकर्म । आनन्दादयः प्रधानस्येति सूत्रम् । आनन्दादिभिरस्थूलत्वा दिभिरुपलक्षितमखण्डैकरसं ब्रह्मास्मीति निर्गुणत्वानुपमर्देनोपसंहृत्योपासन-सम्भवान्निर्गुणब्रह्मैवोपास्यमिति ध्यानदीपादौ ।

३३. चैतन्यं न चक्षुरादिजन्यवृत्तिविषयः । ''पराञ्चि खानि व्यतृणादिति'' श्रुतेः परमाण्वादिवच्चक्षुराद्ययोग्यत्वात् । किन्त्वोपनिषदत्वा-द्वेदान्तजन्यवृत्तिविषय इति नियमादृष्टसहितं तादृशब्रह्मज्ञानमज्ञाननिवर्त-कम्। कतकरजोन्यायेनात्मन्यध्यस्यमानं सत् पूर्वाध्यस्तसविलासमज्ञानं निवर्तयत् सत् स्वात्मानमपि निवर्तयति ।

३४. अन्येतु चरमवृत्तिरूपब्रह्मज्ञानस्य नाज्ञानतन्मूलप्रपञ्चनिवर्तक त्वम्। जडत्वात् । अज्ञानस्य प्रकाशनिवर्त्यत्वनियमात् । किन्तु वृत्त्युपारूढचैतन्य प्रकाशस्य । तस्य स्वरूपतोऽज्ञानादिसाक्षित्वेनाज्ञानाद्य-निवर्तकत्वेप्यखण्डाकारवृत्त्युपारूढस्य तन्निवर्तकत्वोपपत्तेरित्यग्निवत् स्वाश्रय- वृत्तिमपि नाशयतीति ।

३५. अन्येतु ब्रह्मज्ञानमज्ञानस्यैव निवर्तकं प्रपञ्चस्तूपादाननाशान्न श्यतीति तदन्तर्गतब्रह्मज्ञानस्यापि नाशः । एवञ्चेत् प्रारब्धकर्मभोगपर्यन्तं जीवन्मुक्तत्वमुपपद्यत इति ।

३६. **अत मोक्षविचारः** अविद्यानिवृत्तिरेव मोक्षः । साचात्मैवेति ब्रह्मसिद्धिकारः । ब्रह्मरूपाया अप्यविद्यानिवृत्तेरन्वयव्यतिरेकाभ्यां ज्ञान-साध्यत्वनियमादिति ।आनन्दबोधाचार्यास्त्वात्मातिरिक्तैवाविद्यानिवृत्तिः । साच न सती । अद्वैतहानेः । नाप्यसती । ज्ञानसाध्यत्वायोगात्। नापि सदसद्रूपा । नाप्यनिर्वाच्या । अनिर्वाच्यस्य सादेरज्ञानोपादानकत्व नियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः । ज्ञाननिवर्त्यत्वापत्तेश्च। किन्तूक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेति । अन्येत्वविद्यावत्तन्निवृत्तिरप्य-निर्वाच्यैव । मोक्षे तदनुवृत्तौ तदुपादानाज्ञानानुवृत्तिरप्यस्त्वित्यत्र

प्रमाणाभावात्। उत्पत्तेः प्रथमसमयमात्रसंसर्गिभावविकारत्ववन्निवृत्तेरपि चरमसमयमात्रसंसर्गिभावविकारत्वोपपत्तेरिति ।

३७. अथ प्रलय उच्यते । नित्यौ नैमित्तिकः प्राकृत आत्यन्तिकश्चेति । नित्यप्रलयस्सुषुप्तिः । तदा धर्माधर्मपूर्वसंस्काराणां कारणात्मनावस्थानम् । तेन प्रबोधानन्तरं सुखाद्यनुभवस्मरणयोर्नानुपपत्तिः।

कार्यब्रह्मणो हिरण्यगर्भस्य दिवसावसाननिमित्तकस्त्रैलोक्यमात्रनाशो नैमित्तिकप्रलयः ।

प्राकृतप्रलयस्तु कार्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्ता वुत्पन्नब्रह्मसाक्षात्कारैस्सत्यलोकवासिभिस्सह विदेहकैवल्यरूपा परा मुक्तिः । तदा ब्रह्माण्डतदन्तस्थभूतभौतिकादीनामप्राप्तब्रह्मज्ञानानाञ्जीवानाञ्च मायायां लयः । प्रकृतेस्तु न नाशः पुनस्सृष्ट्यर्था सा । ईश्वरात् पूर्ववत् सृष्टिः ।

तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकस्सम्पूर्णमोक्षो विदेहकैवल्य रूपः । तदा ब्रह्मैवाशिष्यते । स चैकजीववादे युगपदेव । अनेकजीववादे क्रमेण ।

३८. अथ मुक्तस्वरूपमुच्यते । एकजीववादे ब्रह्माज्ञानकल्पितस्य जीवेश्वरविभागादिसमस्तभेदप्रपञ्चस्य ब्रह्मज्ञानोदयेन नाशान्निर्विशेषचैतन्यरूपेणैवावस्थानम् ।

३९. अनेकजीववादे जीव इवेश्वरोऽपि प्रतिबिम्बविशेषो निर्विशेषब्रह्मण इति पक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणेवावस्थानम्। अत्र वादे प्रतिबिम्बपक्ष एव साधुः । अवच्छेदपक्षे तु यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणसंसर्गे पुनरपि बन्धापत्तेः ।

४०. तत्रापि बिम्ब ईश्वरः प्रतिबिम्बा जीवा उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे मुक्तस्य सर्वमुक्तिपर्यन्तं सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसत्यकामत्वादिगुणकेश्वरभावप्राप्तिः । न च मुक्तस्याविद्याऽभावात्

सत्यकामत्वादिगुणविशिष्टैरनुपपत्तिरिति वाच्यम् । ऐश्वर्यस्याविद्यकत्वेपि न हीश्वरस्याविद्या निरञ्जनत्वात् । बद्धपुरुषान्तराविद्याकल्पितमेव । तस्मान्मुक्तस्येश्वरभावो युक्तः ।

निन्दको निकटे मेऽस्तु दोषमादाय तोषकृत् ।
गृहिणः श्रीमतो यद्वद्विष्टागर्तो गृहान्तिके ॥
यस्योपास्योपदेष्टारौ सूत्रकृत्समवर्तिनौ ।
जाप्यौ च तारकाष्टार्णौ तेनेदं कृतमर्थिसात् ॥

॥ इति श्रीकृष्णावधूतपण्डितविरचिते अद्वैतनवनीते
मतभेदनिरूपणं नाम पञ्चमगोलकम्
समाप्तोऽयं ग्रन्थः ॥

---

## APPENDIX *A*

### Definitions and Explanatory Phrases

| | |
|---|---|
| अनादिपञ्चकम् | अनादिपञ्चकन्तु विशुद्धात्मा ईशो जीवः प्रकृति-रेतेषां भेदश्चेति । (I.35) |
| अपवादः | शुक्तौ रजतवद् ब्रह्मणि प्रपञ्चो नास्तीति निषेधोऽपवादः । (I. 18) |
| अवच्छेदः | कार्यान्वयि व्यावर्तकं विशेषणमवच्छेदः । (II. 3) |
| आकारः | आकारवतामनेकत्व आकारो जातिः । तस्यैकत्वे गुण एव । (II. 13) |
| आत्मा | आत्मा निष्क्रिय आकाशवदसङ्गो निरंशः परिपूर्ण चैतन्यं सदानन्दरूपो निर्विकार अकर्ताऽकारयिता निर्गुणोऽद्वयः परमात्मा ब्रह्म स्वप्रकाशो वियदादि प्रपञ्चाधिष्ठानञ्च । (I.19) |
| ईश्वरः | सृष्टेः पूर्वं मायायां प्रतिबिम्बितं शुद्धब्रह्मचैतन्य-मीश्वरः (I. 4) । समष्टिकारणशरीरोपाधिक ईश्वरः (1. 13) । मायावच्छिन्नचैतन्यमीश्वरः (II. 2) |
| उपमानम् | सादृश्यप्रमाकरणमुपमानम् (III. 9) |
| उपाधिः | कार्यानन्वयि व्यावर्तकमुपाधिः । (II. 3) |
| कारणशरीरम् | समष्टिरूपा प्रकृतिरीश्वरस्य कारणशरीरम् (I. 6) व्यष्टिरूपाऽविद्याजीवानां कारणशरीरम् (I. 6) |
| जहदजहल्लक्षणा | विशिष्टवाचकपदस्य विशेषणांशत्यागे जहदजहल्लक्षणा । (III. 11) |

| | |
|---|---|
| जीवः | अविद्यासम्बद्धचैतन्यञ्जीवः (II. 3) । अविद्यायां परिच्छिन्नानेकप्रदेशेषु चित्प्रतिबिम्बो जीवः(V.8)। अन्तःकरणेषु चित्प्रतिबिम्बो जीवः (V. 10) । |
| तटस्थलक्षणम् | यावल्लक्ष्यमनवस्थितं सद् व्यावर्तकं तटस्थलक्षणम् (II. 23) |
| तमः | प्रत्यक्षप्रतिबन्धकं नीलरूपवत्तमः । (II. 10) |
| निर्विकल्पकम् | विशेषणविशेष्यसंसर्गानवगाहिज्ञानम् (II. 16) । तात्पर्यमात्रविषयस्य भानम् (II. 16) |
| परिणामः | उपादानत्वाभिमतवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषत्वं परिणामत्वम् । (V I) |
| परिमाणम् | देशतः परिच्छेदः परिमाणम् । (II. 13) |
| प्रत्यक्षम् | तत्तदाकारवृत्त्यवच्छिन्नचैतन्यस्य तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्न चैतन्याभेदः (III.2) घटादिविषयस्य प्रमात्रभेदः (III. 4) |
| प्रामाण्यस्योत्पत्तौ स्वतस्त्वम् | आगन्तुकभावकारणानपेक्षज्ञानसामान्यग्राहकसामग्रीप्रयोज्यत्वम् । (III.17) |
| प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वम् | दोषासहकृतस्वाश्रयसामग्रीमात्रग्राह्यत्वं ज्ञप्तौ स्वतस्त्वम् । (III. 17) |

| | |
|---|---|
| ब्रह्मण उपादानत्वम् | जगदाकारेण परिणममाणाविद्याधिष्ठानत्वाद् ब्रह्मणो जगदुपादानत्वम् (II. 22) |
| मोक्षः | अविद्यानिवृत्तिरेव मोक्षः । (V. 36) |
| विवर्तः | उपादानत्वाभिमतवस्तुसत्ताभिन्नसत्ताकत्वे सति तदवस्थाविशेषत्वं विवर्तत्वम् । (V. 1) |
| विभुत्वम् | त्रिविधपरिच्छेदाभावः (II. 13) |
| वृत्तिज्ञानम् | जाग्रत्स्वप्नयोर्विषयप्रकाशकं वृत्तिज्ञानम् (I. 32) |
| सद्वितीयत्वम् | वस्तुतः परिच्छेदस्सद्वितीयत्वम् । (II. 13) |
| सप्तावस्थाः | आवरणं विक्षेपोऽज्ञानं परोक्षज्ञानमपरोक्षज्ञानमनर्थ निवृत्तिरानन्दवाप्तिरिति जीवस्य सप्तावस्थाः । (I. 17) |
| साक्षी | देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य साक्षादीक्षणान्निर्विकारत्वाच्च साक्षीत्यु च्यते । सर्वप्रत्यग्भूतं विशुद्धं ब्रह्म जीवाभेदेन साक्षी etc., (II. 23) |
| सृष्टिदृष्टिः | सृष्टिदृष्टिस्त्वीश्वरसृष्टमज्ञातसत्ताकमेव विश्वम् । तत्तद्विषयप्रमाणावतरणे तस्य तस्य दर्शनं भवति । (V. 29) |
| हिरण्यगर्भः | अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः । (V. 12) |

## APPENDIX *B*

### Select Vedantic terms

| | |
|---|---|
| अज्ञान | Nescience; the indeterminable principle that brings about the illusory manifestation of the world and veils *Brahman*. |
| अधिष्ठान | Substratum |
| अन्तःकरण | Internal organ consisting of बुद्धि, मनस्, चित्त and अहंकार |
| अध्यारोप | Superimposition |
| अध्यास | Superimposition |
| अपवाद | Withdrawal of superimposition |
| अर्थक्रिया-कारित्व | Practical efficiency |
| अविद्या | Nescience or that aspect of nescience which veils Brahman and gives rise to *Jīva* |
| अवच्छेदवाद | The view that *Jīva* is the appearance of *Brahman* as defined by *avidyā* |
| अव्याकृत | Unmanifest state of nescience |
| आवरणशक्ति | The veiling power of nescience |
| ईश्वर | *Brahman* associated with nescience: the cosmic self |
| उपादान | Material cause; *Brahman* is material cause as the substrate of *māyā* |
| उपाधि | Adjunct; qualification per accidens |
| ऐक्यापरोक्ष | Immediate experience of identity |
| कारणशरीर | Causal body |

| | |
|---|---|
| कूटस्थ | Immutable |
| चरमवृत्तिज्ञान | The last psychosis cognition comprehending *Brahman* |
| जहदजहल्लक्षणा | Exclusive-non-exclusive implication; a qualified word abandoning a part of its sense and denoting the remaining part only; i.e., तत्त्वमसि. |
| तटस्थलक्षण | Definition per accidens |
| तूलाविद्या | Derivative nescience |
| दृष्टिसृष्टिवाद | The theory that perception is creation |
| निर्विकल्पक | The stage of comprehension where the distinction of cogniser, the object cognised and the cognition is elimitated |
| पारमार्थिक | Noumenal; Real. |
| प्रतिबिम्बवाद | The view the *Jīva* is the appearance of Brahman as reflected in nescience |
| प्रमातृचैतन्य | Cognative consciousness |
| प्रमाणचैतन्य | Cogniser consciousness |
| प्रातिभासिक | Apparent |
| माया | Nescience or that aspect of nescience which gives rise to *Iśvara* and illusorily projects the world on Brahman |
| मिथ्यात्व | The nature of being indeterminable either as real or unreal |
| मूलाविद्या | Primal nescience |
| लिङ्गशरीर | Subtle body |
| विवर्त | Transfiguration; illusory appearance |
| विषयचैतन्य | Content defined consciousness |

| | |
|---|---|
| विक्षेपशक्ति | The Projecting power of nescience. |
| वृत्तिज्ञान | Cognition with a phychosis nature |
| व्यष्टि | A unit of an aggregate |
| व्यावहारिक | Phenomenal; empirical |
| शबल | *Brahman* associated with nescience |
| सदसद्विलक्षण | Neither real nor unreal |
| समष्टि | Aggregate |
| सविकल्पक | The stage of comprehension where the distinction between the cogniser and the object cognised is felt |
| साक्षी | Witness self |
| सूक्ष्मशरीर | Subtle body |
| सृष्टिदृष्टिवाद | The theory that world is created by *Iśvara* but its nature is indeterminable either as real or unreal |
| स्वरूपलक्षण | Definition by essential nature; constitutive definition |
| स्वसंवेद्य | Self-luminous |
| हिरण्यगर्भ | Cosmic form of the self creating subtle universe |



**DVAITA VEDANTA WORKS EDITED AND TRANSLATED**
**By Prof. K. T. PANDURANGI**



1. विष्णुतत्वविनिर्णयः with Kannada translation, published by Sri Raghavendra Asrama Trust, 56/10, 17th Cross, Malleswaram, Bangalore. Rs. 18.00
2. सदाचारस्मृतिः with Kannada translation, published by Sri Raghavendra Seva Samiti, IV 'T' Block, Jayanagar, Bangalore-11 Rs 2.25
3. ईशावास्य-तलवकारकाठकोपनिषदः with English translation, published by S.M.S.O. Sabha, Padmasarovara Rs. 12.00
4. षट्प्रश्न-आथर्वण-माण्डूक्योपनिषदः with English translation, published by S.M.S.O. Sabha, Padmasarovara Rs. 15.00
5. छान्दोग्योपनिषत् with English translation, published by S.M.S.O. Sabha, Padmasarovara Rs. 30.00
6. बृहदारण्यकोपनिषत् with English translation, published by S.M.S.O. Sabha, Padmasarovara Rs. 40.00
7. ऐतरेयोपनिषत् with English translation, published by S.M.S.O. Sabha, Padmasarovara Rs. 20.00
8. ब्रह्मसूत्रानुव्याख्यानम् Rs. 30.00
9. गीतातात्पर्यनिर्णयः with Kannada translation. Included in the Kannada Sarvamūla Volume I
10. ईशावास्योपनिषत् do Vólume II

11. **Essentials of Yuktimallika** Rs. 10.00

12. **Essentials of Upanishads** Rs. 10.00

13. **Essentials of Bhagavadgita** Rs. 6.00

14. ಉಪನಿಷದ್-ದರ್ಶನ Volume I & II ಪ್ರತಿಗಳು ತೀರಿವೆ.
ಮಿಂಚಿನಬಳ್ಳಿ ಗ್ರಂಥಮಾಲೆ, ಧಾರವಾಡ

15. ಮಹಿಪತಿದಾಸರ ಕೃತಿಗಳಲ್ಲಿ ಆಧ್ಯಾತ್ಮಿಕ ದೃಷ್ಟಿ
ಪ್ರಕಾಶಕರು : ಡಾ. ಕೆ. ಎ. ಕಾಖಂಡಿಕಿ, ಇಳಕಲ್ Rs. 3.00

16. श्लोकतात्पर्यचन्द्रिका in the Press

17. अद्वैतनवनीतम् of Krishnavadhuta Pandita,
Edited with detailed introduction. Rs.35.00

18. ಹತ್ತನೆಯ 'ಮಾಧ್ವತತ್ವ ಸಮ್ಮೇಳನದ ಅಧ್ಯಕ್ಷ ಭಾಷಣ Rs. 2.00

19. ब्रह्मसूत्राणुभाष्यम् with Kannada translation
published by Sarvajnacharya Sangha,
Davanagere. Rs. 10.00

20. तत्त्वमञ्जरी with Kannada translation Rs. 40.00

21 तैत्तिरीयोपनिषत् Rs.15.00

(Copies of these publications can be had from the respective Publishers.
No.5,6,and 8 can be had from the author.)